॥ श्रीगणेशाय नमः ॥ अथ वासिष्ठीहवनपद्धतिः ॥ तत्रादौप्रतिज्ञा । विष्णुर्विष्णु
र्विष्णुरद्य ॐनमःपरमात्मनेश्रीपुराणपुरुषोत्तमाय।अद्यश्रीब्रह्मणोद्वितीयपरार्द्धेश्री
श्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमेयुगे कलियुगे प्रथमचरणे जंबूद्वी
पेभरतखण्डे आर्यावर्तांतर्गतब्रह्मावर्तैकदेशे महाश्मशाने आनंदवने अविमुक्तवा
राणसीक्षेत्रे गौरीमुखे त्रिकंटकविराजिते बौद्धावतारे वर्तमाने यथानामसंवत्सरे
अमुकायने महामांगल्यप्रदे मासानांमासोत्तमे मासे अमुकमासे अमुकपक्षे अमु-
कवासरान्वितायाममुकतिथावमुकदिनक्षें अमुकराशिस्थिते सूर्ये अमुकराशिस्थ
तेषु रविचंद्रभौमबुधगुरुशुक्रशनिषुसत्सु शुभनामयोगे शुभकरणे एवंगुणविशेषण
विशिष्टायांशुभपुण्यतिथौ परमेश्वराज्ञारूपसकलशास्त्रश्रुतिस्मृतिपुराणोक्तफलप्रा

प्तिकामः अमुकगोत्रोत्पन्नः अमुकशर्माऽहमात्मनः सपुत्रबांधवस्य ग्रहकृतराजकृत सर्वविधपीडानिवृत्तिपूर्वकनैरुज्यदीर्घायुःपुष्टिधनधान्यसमृद्ध्यर्थं नवग्रहमखेनय-क्ष्ये इतिसंकल्पः।अथवरणं पटमंडपादिकरणंतदभावेऽन्येनाच्छादनम्ततः स्वस्ति वाचनम्ॐस्वस्तिनइंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाःस्वस्तिनस्तार्क्ष्योअरि ष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु १ पृषदश्वामरुतःपृश्निमातरःशुभंयावानोविदथे षुजग्मयः अग्निर्जिह्वामनवःसूरचक्षसोविश्वेनोदेवाअवसागमन्निह॥२॥भद्रंकर्णेभिः शृणुयामदेवाभद्रंपश्येमाक्षभिर्यजत्राः स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देव हि-तंयदायुः ३ शतमिन्नुशरदोअंतिदेवायत्रानश्चक्राजरसंतनूनाम्। पुत्रासोयत्रपितरो भवन्तिमानोमध्यारीरिषतायुर्गन्तोः ४ अदितिर्द्यौरदितिरंतरिक्षमदितिर्मातासपि-

मवान्तमानामध्यारोरिषतायुगन्ती: ४ अदितिद्यौरदितिरन्तरिक्षमदितिर्मातासपि-



तासपुत्रः विश्वेदेवासअदितिः पंचजनाअदितिर्जातमदितिर्जनित्वम् ५ दीर्घायुत्वायब-
लायवर्चसे सुप्रजायत्वासहसा अथोजीवशरदःशतम् ६ ॐ द्यौः शांतिरंतरिक्षं शांतिः
पृथिवीशांतिरापओषधयः शांतिर्वनस्पतयः शांतिर्विश्वेदेवाः शांतिर्ब्रह्मशांतिः सर्वं
शांतिः शांतिरेवशांतिः सामाशांतिरेधि सुशांतिर्भवतु ॥ ७॥ इतिस्वस्तिवाचनम् ॥
श्रीगणेशाय नमः ॥ अथ पुण्याहवाचनम् ॥ तत्रादौब्राह्मणकरे शिवाआपः
संतु। ब्राह्मणवचनं सौमनस्यमस्तु एवं अक्षताः पांतुमांगल्यमस्तु पुष्पाणिपांतुश्रीर
स्तु तांबूलानिपांतुऐश्वर्यमस्तु दक्षिणाः पांतुआरोग्यमस्तुदीर्घायुःशांतिःपुष्टिस्तुष्टिः
श्रीर्यशोविद्याविनयोवित्तंबहुपुत्रंबहुधनंचायुष्यंचास्तु यं कृत्वासर्ववेदयज्ञक्रियाक-
रणारंभाःशोभनाःप्रवर्तन्ते तमहमोंकारमादिंकृत्वाऋग्यजुःसामाथर्वणाशीर्वचनंब

हुत्कऋषिमतंसमनुज्ञातंभवद्भिरनुज्ञातः पुण्यंपुण्याहंवाचयिष्ये वाच्यतामितिब्राह्मणव चनम् पुनर्यजमानोब्रूयात् व्रतनियमतपःस्वाध्यायक्रतुदमदानविशिष्टानांसर्वेषां ब्राह्मणानांमनःसमाधीयताम्, ब्राह्मणाःसमाहितमनसःस्मःयजमानोब्रूयात् प्रसी- दन्तु भवंतःब्राह्मणाःप्रसन्नाःस्मःततोयजमानः अवनिकृतजानुमण्डलःकमलमुकुल- सदृशमंजलिं शिरस्याधाय दक्षिणेनपाणिनाजलपूर्णसुवर्णकलशं धारयित्वा भूमौ पात्रद्वयेस्थापिते प्रथमपात्रेकिंचिदुदकं पातयेत् तत्रब्राह्मणावदेयुः ॐ शांतिरस्तु पुष्टिरस्तु वृद्धिरस्तु ऋद्धिरस्तु अविघ्नमस्तु आयुष्यमस्तु आरोग्यमस्तु शिवमस्तु शिवं कर्मास्तु कर्मसमृद्धिरस्तु पुत्रसंमृद्धिरस्तु वेदसमृद्धिरस्तु शास्त्रसमृद्धिरस्तु धनधान्यसमृद्धिरस्तु इष्टसंपदस्तु अरिष्टनिरसनमस्तु यच्छ्रेयस्तदस्तु। ततो द्विती-

धनधान्यसमृद्धिरस्तु इष्टसंपदस्तु अरिष्टनिरसनमस्तु यच्छ्रेयस्तदस्तु । ततो द्विती-



यपात्रेपातयेत् यत्पापमकल्याणंतद्दूरंप्रतिहतमस्तु । पुनःप्रथमपात्रेपातयेत् । उत्त-
रोत्तरे कर्मण्याविघ्नमस्तु उत्तरोत्तरमहरहरभिवृद्धिरस्तु उत्तरोत्तराःक्रियाःशुभाः
शोभनाःसंपद्यंताम् तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताःप्रीयंताम् तिथिकरणे
सुमुहूर्ते सनक्षत्रेसग्रहेसदैवतेप्रीयेताम् । अग्निपुरोगाविश्वेदेवाःप्रीयन्ताम् इन्द्रपुरो
गामरुद्गणाःप्रीयन्ताम् ।माहेश्वरीपुरोगाउमामातरःप्रीयन्ताम् ।वसिष्ठपुरोगाऋषि-
गणाःप्रीयंताम् । अरुंधतीपुरोगाएकपत्न्यः प्रीयंताम् । ब्रह्मपुरोगाः सर्ववेदाःप्रीयं-
ताम् विष्णुपुरोगाः सर्वेदेवाःप्रीयंताम् ऋषयश्छंदांस्याचार्या वेदादेवायज्ञाश्चप्रीयं
ताम् ब्रह्मचब्राह्मणाश्चप्रीयंताम् अम्बिकासरस्वत्यौ प्रीयेताम् श्रद्धामेधेप्रीयेताम्
दुर्गापांचाल्यौप्रीयेताम् भगवती कात्यायनी प्रीयताम् भगवतीमाहेश्वरीप्रीयताम्

भगवतीऋद्धिकरीप्रीयताम् भगवतीवृद्धिकरीप्रीयताम् भगवतीपुष्टिकरीप्रीयताम्
भगवतीतुष्टिकरीप्रीयताम् भगवन्तौविघ्नविनायकौप्रीयेताम्सर्वाःकुलदेवताःप्रीयं-
ताम् सर्वाग्रामदेवताःप्रीयंताम् सर्वाइष्टदेवताःप्रीयंताम् । पुनर्द्वितीयपात्रेपातयेत्
हताश्चब्रह्मद्विषःहताश्चपरिपंथिनःहताश्चविघ्नकर्तारःशत्रवःपराभवंयान्तुशाम्यंतु
घोराणि शाम्यन्तुपापानिशाम्यन्त्वीतयः।पुनःप्रथमपात्रेपातयेत्शुभानिवर्धन्ताम्
शिवाआपःसन्तु शिवाऋतवःसन्तु शिवाअग्नयःसन्तु शिवाआहुतयःसन्तु शिवा
वनस्पतयःसन्तुशिवाअतिथयःसन्तु अहोरात्रेशिवेस्याताम्निकामेनिकामेनःपर्ज
न्योवर्षतु फलवत्योनओषधयःपच्यंताम् योगक्षेमोनःकल्पताम्शुक्रांगारकबुधबृह
स्पतिशनैश्चरराहुकेतुसोमसहिताआदित्यपुरोगाःसर्वेग्रहाःप्रीयंताम् भगवान्नाराय-

स्पतिशनैश्चरराहुकेतसामसाहिता आदित्यपुरोगाः सर्वग्रहाः प्रीयताम् भगवान्नाराय-



णः प्रीयताम् भगवान्पर्जन्यः प्रीयताम् भगवान्स्वामीमहासेनः प्रीयताम् पुरोनुवा
क्यययायत्पुण्यंतदस्तुयाज्ययायत्पुण्यंतदस्तु वषट्कारेणयत्पुण्यंतदस्तु प्रातःसूर्यो-
दयेयत्पुण्यंतदस्तु । ततोयजमानः सुवर्णकलशंभूमौनिधायप्रथमपात्रपातितजलेन
शिरःसंमृज्यसपरिवारंगृहंचाभिषेचयेत्द्वितीयपात्रपातितजलमेकांतेपातयेत्ब्राह्म-
णाः पुनरूचुः—ब्राह्मंपुण्यमहर्यच्चसृष्ट्युत्पादनकारकम् । वेदवृक्षोद्भवंपुण्यंतत्पुण्याहंब्रु
वंतुनः । यजमानोब्रूयात् भोब्राह्मणाःममसपरिवारस्यगृहेपुण्याहंभवंतोब्रुवंतु ( ब्राह्म
णाः ) ॐ पुण्याहं३ पुनंतुमादेवजनाःपुनंतुमनसाधियःपुनंतुविश्वाभूतानिजातवे-
दःपुनीहिमा (पुनर्ब्राह्मणाः) पृथिव्यामुद्धृतायांतुयत्कल्याणंपुराकृतमृषिभिःसि
द्धगंधर्वैस्तत्कल्याणंब्रुवंतुनः (यजमानः) भोब्राह्मणाः ममसपरिवारस्यगृहेकल्याणं

भवंतोब्रुवंतु (ब्राह्मणाः) ॐ कल्याणं ३ यथेमांवाचंकल्याणीमावदानिजनेभ्यो ब्र
ह्मराजन्याभ्या ᳪ शूद्रायचार्य्यायचस्वायचारणायचप्रियोदेवानां दक्षिणायैदातुरिहा
भूयासमयंमेकामःसमृद्ध्यतामुपमादोनमतु ( ब्राह्मणाः ) सागरस्यचयालक्ष्मीर्महा
लक्ष्म्यादिभिःकृता ॥ संपूर्णासुप्रभावाचतांचऋद्धिंब्रुवतुंनः (यजमानः) भोब्राह्मणाः
ममसपरिवारस्यगृहेऋद्धिंभवंतोब्रुवंतु ( ब्राह्मणाः ) ॐ ऋद्ध्यताम् ३ मनस्यऋद्धिर
स्यजन्मज्योतिरमृताअभूमादिवंपृथिव्याअद्ध्यारुहामाविदामदेवान्स्वर्ज्योति (पुन
र्ब्राह्मणाः)स्वस्तिस्तुयाऽविनाशाख्यानित्यंमंगलदायिनी। विनायकप्रियानित्यंतांच
स्वस्तिंब्रुवंतुनः ( यजमानः ) भोब्राह्मणाः ममसपरिवारस्यगृहेस्वस्तिभवंतोब्रुवंतु
(ब्राह्मणाः) ॐ स्वस्ति ३ स्वस्तिनइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः। स्वस्ति

(ब्राह्मणाः) ॐ स्वस्ति ३ स्वस्तिनइन्द्रोवृद्धश्रवाः स्वस्तिनःपूषाविश्ववेदाः । स्वस्ति



नस्तार्क्ष्योअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ( ब्राह्मणाः ) समुद्रमथनाज्जाता
जगदानंदकारिका ॥ हरिप्रियाचमांगल्यातांश्रियंब्रुवंतुनः ( यजमानः ) भोब्राह्म
णाः ममसपरिवारस्यगृहेश्रीरस्त्विति भवंतोब्रुवंतु (ब्राह्मणाः) ॐ अस्तुश्रीः ३ श्रीश्च
तेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् इष्णं निषाणामुंमइ
षाणसर्वलोकंमइषाण॥ततस्तिलकाशीर्वादः अत्रदक्षिणादानम् । ॐ अद्यपुण्याहवाच
नसांगतासिद्ध्यर्थंपुण्याहवाचकेभ्यो नानानामगोत्रेभ्यो ब्राह्मणेभ्यइमांयथाशक्ति
हिरण्यदक्षिणांसंप्रददे इतिपुण्याहवाचनम् ॥ अथवरणम् । पूर्वमाचार्यंवृणुयात पश्चा
त्सर्वेषांवरणम् तद्यथा आचार्यंप्रतियजमानोब्रूयात् अस्मिन्नासनेआस्यताम् आ
चार्यो ब्रूयात आस्ये ततोयजमानः नमोस्त्वनन्तायेतिमंत्रेणपादप्रक्षालनं कुर्यात

नमोऽस्त्वनंतायसहस्रमूर्तयेसहस्रपादाक्षिशिरोरुबाहवे सहस्रनाम्नेपुरुषायशाश्वतेस
हस्रकोटीयुगधारिणेनमः १ नमोब्रह्मण्यदेवायगोब्राह्मणहितायच। जगद्धितायकृष्णा
यगोविंदायनमोनमः॥ २॥ गंधमाल्यादिभिरभ्यर्च्यॐ युञ्जन्तिब्रध्नमरुषंचरंतंपरित
स्थुषः रोचंतेरोचनादिवि युञ्जंत्यस्यकाम्याहरीविपक्षसारथे शोणाधृष्णूनृवाहसा १
ॐ अद्येत्यादिनवग्रहमखहोमकर्मकर्तुमेभिश्चंदनतांबूलकुण्डलांगुलीयककमंडलु
वासोभिराचार्यत्वेनामुकगोत्रं अमुकशर्माणं अमुकवेदाध्यायिनं त्वामहं वृणे आ
चार्योवृतोऽस्मीइतिप्रतिवचनंदद्यात्ॐ व्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम्॥
दक्षिणाश्रद्धामाप्नोति श्रद्धयासत्यमाप्यते इत्यनेनमंत्रेणकुशस्थैर्जलबिन्दुभिर्यज
मानमभिषिंचेत अथाचार्यप्रार्थना आचार्यस्तुयथास्वर्गेशक्रादीनांबृहस्पतिः तथा

मानममभिषिंचेत अथाचार्यप्रार्थना आचार्यस्तु यथास्वर्गे शक्रादीनां बृहस्पतिः। तथा

त्वंममयज्ञेऽस्मिन्नाचार्योभवसुव्रत १ अथब्रह्मवरणम् ब्रह्माणंप्रतियजमानोब्रूयात
अस्मिन्नासनेआस्यताम् (ब्राह्मणः) आस्येततोयजमानःनमोऽस्त्वनंतायेतिमंत्रेण
पादप्रक्षालनंकुर्यात् गंधपुष्पमाल्यादिभिरभ्यर्च्य ॐ अद्येत्यादिनवग्रहमखहोमक
र्मणिन्यूनाधिकसंरक्षणार्थमेभिश्चंदनतांबूलकुण्डलांगुलीयककमंडलुवासोभिर्ब्रह्म-
त्वेनामुकगोत्रंअमुकशर्माणं अमुकवेदाध्यायिनंत्वामहंवृणे ( ब्राह्मणः ) वृतोऽस्मि
इतिप्रतिवचनम् (यजमानः) यथाचतुर्मुखोब्रह्मासर्ववेदधरःप्रभुः। तथात्वंममयज्ञेऽ
स्मिन्ब्रह्माभवद्विजोत्तम॥१॥ (ब्रह्मा) ॐव्रतेनदीक्षामाप्नोतिदीक्षयाऽऽप्नोतिदक्षिणाम्
दक्षिणाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते॥ इत्यनेनमंत्रेणकुशस्थैर्जलबिन्दुभिर्यज
मानमभिषिंचेत् अथऋत्विग्वरणम् ऋत्विजंप्रतियजमानोब्रूयात इदमासनमास्य

ताम् ( ऋत्विक् ) आस्य ततो ( यजमानः ) नमोऽस्त्वनंतायेतिमंत्रेणपादप्रक्षालनंकुर्यात् गंधपुष्पमाल्यादिभिरभ्यर्च्य ॐ अद्येत्यादिनवग्रहमखहोमकर्मणि हवनंकर्तुमेभिश्चंदनतांबूलकुंडलांगुलीयककमण्डलुवासोभिः ऋत्विक्त्वेनामुकगोत्रंअमुकशर्माणं अमुकवेदाध्यायिनंत्वामहंवृणे ( ऋत्विक् ) वृतोऽस्मिइतिप्रतिवचनम् ( यजमानः ) ऋग्वेदःपद्मपत्राक्षोगाथत्रःसोमदैवतः अत्रिगोत्रस्तुविप्रेन्द्रऋत्विक्त्वंमेमखेभव १ ( ऋत्विक् ) ॐ व्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम् दक्षिणाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते इत्यनेनमंत्रेणकुशस्थैर्जलबिन्दुभिर्यजमानमभिषिंचेत् ॥ एवं अध्वर्युंहोतारंसदस्यमुपद्रष्टारंचवृणुयात् ॥

अथसर्वेषांप्रार्थना त्वंगुरुश्चपितामातात्वंप्रभुस्त्वंपरायणम् त्वत्प्रसादाद्धविप्र

अथसर्वेषांप्रार्थना त्वंगुरुश्चापितामातात्वंप्रभुस्त्वंपरायणम् त्वत्प्रसादाद्विप्र



र्षेसर्वमेस्यान्मनोगतम् १ आपद्विमोक्षणार्थायकुरुयज्ञमतंद्रितः ऋत्विग्भिःसहि
तैःशुक्लैःसंयुतैःसुसमाहितैः २ आचार्येणचसंयुक्तःकुरुकर्मयथोदितम् भगवन्सर्वधर्म
ज्ञसर्वधर्मभृतांवर विततेममयज्ञेऽस्मिन्नुपद्रष्टाभवद्विज ३ अथरक्षाभिधानम् तत्रा
दौश्वेतसर्षपतंडुलपूर्णपुटकमादायरक्षासूत्रंसफलदक्षिणाकंगृहीत्वा मंत्रान्पठित्वा
सर्षपाक्षतैर्दिग्रक्षांकुर्यात् ॐ पूर्वेरक्षतुवाराहआग्नेय्यांगरुडध्वजः दक्षिणेपद्मना
भस्तुनैर्ऋत्यांमधुसूदनः॥ पश्चिमेचैवगोविंदोवायव्यांतुजनार्दनः उत्तरेश्रीपतीरक्षे
दीशान्यांहिमहेश्वरः ऊर्ध्वंरक्षतुधातावोत्वधोऽनंतश्चरक्षतु ॥ अनुक्तमपियत्स्थानं
रक्षत्वीशोममाद्रिधृक् ॥ रक्षासूत्रं ॐ येनबद्धोबलीराजादानवेन्द्रोमहाबलः तेन
त्वांप्रतिबध्नामिरक्षेमाचलमाचल १ यजमानगात्रप्रमाणं अन्येषां प्रमाणंन ॥ इति

आचार्यादिवरणम्॥ अथकलशस्थापनम् ॐ भूरसिभूमिरस्यदितिरसिविश्वधाया
विश्वस्यभुवनस्यधर्त्री पृथिवींयच्छपृथिवींदृꣳहपृथिवींमाहिꣳसीः इतिमंत्रेणगं
धादिभिःपृथ्वीमभिपूज्यहस्तेनस्पर्शंकुर्यात ॐमानस्तोकेतनयेमानआयुषिमानोगो
षुमानोअश्वेषुरीरिषः मानोवीरान्रुद्रभामितोवधीर्हविष्मंतःसदमित्वाहवामहेइ
तिमंत्रेणकलशेगोमयस्पर्शंकुर्यात् ओं धान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्वा
व्यानायत्वा दीर्घामनुप्रसितिमायुषेधां देवोवःसविताहिरण्यपाणिःप्रतिगृह्णात्वचिछ
द्रेणपाणिनाचक्षुषेत्वामहीनांपयोसिइतिमंत्रेणधान्यराशिंकृत्वाओंआजिघ्रकलशंम
ह्यात्वाविशंत्विन्दवःपुनरूर्जानिवर्तस्वसानः सहस्रंधुक्ष्वोरुधापयस्वतीपुनर्माविश
ताद्रयिःइतिमंत्रेणकलशस्पर्शंकुर्यात ओं वरुणस्योत्तंभनमसिवरुणस्यस्कम्भसर्ज

नीस्थो वरुणस्यऋतसदन्यसिवरुणस्यऋतसदनमसिवरुणस्यऋतसदनमासी
दइतिमंत्रेणकलशेजलंदद्यात् ॐ पवित्रेस्थोवैष्णव्यौसवितुर्वःप्रसवउत्पुनाम्यच्छि
द्रेणपवित्रेणसूर्यस्यरश्मिभिः इतिमंत्रेणकलशेपवित्रंदद्यात ॐ अम्बेअम्बिकेऽम्बा
लिकेनमानयतिकश्चन ससस्त्यश्वकःसुभद्रिकांकांपीलवासिनीम् इतिमंत्रेणकलशे
पंचपल्लवान्दद्यात ॐ प्राणायस्वाहाऽपानायस्वाहाव्यानायस्वाहा इतिमंत्रेणकल
शे तांबूलंदद्यात् ॐ याःफलिनीर्याअफलाअपुष्पायाश्चपुष्पिणीः बृहस्पतिप्रसू
तास्तानोमुञ्चंत्व हसः इतिमंत्रेणकलशेपूगीफलंनारिकेलंवादद्यात ॐ हिरण्यगर्भः
समवर्ततताग्रेभूतस्यजातः पतिरेकआसीत् सदाधारपृथिवींद्यामुतेमांकस्मैदेवाय
हविषाविधेमइतिमंत्रेणकलशेहिरण्यम्अन्यद्द्रव्यंवादद्यातॐअग्निर्ज्योतिर्ज्योति

रग्निःस्वाहासूर्य्योज्योतिर्ज्योतिःसूर्य्यःस्वाहा अग्निर्वर्चोज्योतिर्वर्च्चःस्वाहासूर्य्योवर्चो ज्योतिर्वर्च्चःस्वाहाज्योतिःसूर्य्यःसूर्य्योज्योतिःस्वाहाइतिमंत्रेणकलशसमीपेपूर्वदिशि एकस्मिन्पात्रेदीपंनिदध्यातइतिकलशस्वरूपम् ॥अथकलशाधिष्ठातृदेवतानामावा हनम् ॐ सरितःसागराःशैलास्तीर्थानिजलदानदाःआयान्तुयजमानस्यदुरितक्षय कारकाः इतिमंत्रेणकलशेगंधाक्षतपातः ॥ कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः मूलेतस्यस्थितोब्रह्मामध्येमातृगणःस्मृतः कुक्षौतुसागराःसप्तसप्तद्वीपावसुंधरा। ऋ ग्वेदोऽथयजुर्वेदःसामवेदोह्यथर्वणः अंगैश्चसहिताःसर्वेकलशंतुसमाश्रिताः इत्या वाह्याभिपूजनंकुर्यात तत्रादौसंकल्पः महामांगल्यप्रदेमासोत्तमेवामुकमासिअमु कपक्षेचामुकतिथौ अमुकगोत्रस्यामुकशर्मणः सपरिवारस्यनिखिलकामनावाप्त्य

कपक्षचामुकातथा अमुकगोत्रस्यामुकशर्मणः सपरिवारस्यानोखिलकामनावाप्त्य



र्थंकर्तव्यं अमुकतृप्तिजनकाऽमुककर्मकर्तुंकलशाधिष्ठातृदेवतानांपूजनमहंकरिष्ये इ
तिसंकल्प्यॐकलशाधिष्ठातृदेवताभ्योनमःइतिमंत्रेणगंधादिभिःसंपूज्य पुष्पांजलिं
निवेद्यनतिंकुर्यात् अथकलशप्रार्थना देवदानवसंवादेमथ्यमानेमहोदधौ उत्पन्नोऽसि
तदाकुंभविधृतोविष्णुनास्वयम् त्वत्तोयसर्वतीर्थानिदेवाःसर्वेत्वयिस्थिताः त्वयिति
ष्ठंतिभूतानित्वयिप्राणाःप्रतिष्ठिताःशिवःस्वयंत्वमेवासिविष्णुस्त्वंचप्रजापतिः आ
दित्यावसवोरुद्राविश्वेदेवा सपैतृकाःत्वयितिष्ठंतिसर्वेऽपियेचकामफलप्रदाः त्वत्प्रसा
दादिमंयज्ञंकर्तुमीहेजलोद्भव सान्निध्यंकुरुमेदेवप्रसन्नोभवसर्वदा इतिकलशस्थापन
म् अथकलशाग्रेपश्चिमदिशिगणेशाम्बिकयोःपूजनम् तत्रादौहस्तेगंधाक्षतपुष्पाणि
गृहीत्वागणेशावाहनंकुर्यात ॐएत्येहिहेरम्बमहेशपुत्रासमस्तविघ्नौघविनाशदक्ष ॥

मांगल्यपूजाप्रथमप्रधानगृहाणपूजांभगवन्नमस्ते ॐ गणानांत्वागणपति ᳩं हवाम
हेप्रियाणांत्वाप्रियपति ᳩं हवामहेनिधीनांत्वानिधिपति ᳩं हवामहेव्वसोमम आहम
जानिगर्भधमात्वमजासिगर्भधम् आगच्छभगवन्देवस्वस्थानात्परमेश्वर अहंपूजां
करिष्यामिसदात्वंसंमुखोभव १इत्यावात्द्यपूजयेत् एतत्पाद्यंगणपतयेनमः एषोर्घोगण
पतयेनमः एतत्स्नानीयंजलंगणपतयेनमः इमेवस्त्रयज्ञोपवीतेगणपतयेनमः इदंगंधंग
णपतयेनमः इमेअक्षताःगणपतयेनमः इदंपुष्पंमाल्यंचगणपतयेनमः ॐ धूरसिधूर्वधू
र्वंतंधूर्वतंयोस्मान्धूर्वतितंधूर्वयंवयंधूर्वामः देवानामसिवह्नितम ᳩं सस्नितमंपाप्रितमं
जुष्टतमंदेवहूतमंइतिमंत्रेणधूपंगणपतयेनमः ॐ अग्निर्ज्योतिरितिमंत्रेणदीपंगणप
तयेनमः नैवेद्यंगणपतयेनमः आचमनीयंगणपतयेनमः तांबूलंगणपतयेनमः फलंद

तयेनमः नैवेद्यंगणपतयेनमः आचमनीयंगणपतयेनमः तांबूलंगणपतयेनमः फलंद



क्षिणांचगणपतयेनमः अथविशेषार्घः रक्षरक्षगणाध्यक्षरक्षत्रैलोक्यरक्षक भक्तानामभयंकर्तात्राताभवभवार्णवात् १ द्वैमातुरकृपासिंधोषाण्मातुराग्रजप्रभो वरदस्त्वंवरंदेहिवांछितंवांछितार्थद २ गृहाणार्घमिमंदेवसर्वदेवनमस्कृत अनेनफलदानेनफलदोस्तुसदामम ३ इतिविशेषार्घः अथपुष्पांजलिः मालतीमल्लिकाजातीशतपत्रादिसंयुतम् पुष्पांजलिंगृहाणेशतवपादयुगार्पितम् पुष्पांजलिंनिवेद्य ॐ एतान्यर्चनानिपाद्यार्घस्नानवस्त्रयज्ञोपवीतगंधाक्षतपुष्पधूपदीपनैवेद्याचमनीयताम्बूलफलदक्षिणापुष्पांजल्यंतानिपरिपूर्णानिभवंतु ॥ अनेनपूजनेनगणपतिः प्रीयताम् अथप्रार्थना विघ्नेश्वरायवरदायसुरप्रियायलंबोदरायसकलायजगद्धिताय नागाननायश्रुतियज्ञविभूषितायगौरीसुतायगणनाथनमोनमस्ते १ इतिप्रार्थना ॥ अथ

गौरीपूजनम् ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तं इष्णंनिषाणामुम्मइषाणसर्वंलोकंमइषाण १ सर्वमंगलमांगल्येशिवेसर्वार्थसाधिके शरण्येत्र्यंबकेगौरिनारायणिनमोऽस्तुते २ ॐ गौर्यैनमः इत्यनेनपाद्यादिभिः संपूज्य कुंकुमंकामनादिव्यंकामनाकामसंभवम् कुंकुमेनार्चितेदेविगृहाणपरमेश्वरि १ हरिद्रानिर्मितादेविसौभाग्यसुखसंपदा अतस्त्वांपूजयिष्यामिगृहाणपरमेश्वरि २ अबीरंचगुलालंचचोवाचंदनमेवच अबीरेणार्चितादेवि अतः शांतिप्रयच्छमे ३ सिंदूरंशोभनंरक्तंसौभाग्यंप्रियवर्धनम् सुखदंमोक्षदंचैवसिंदूरंप्रतिगृह्यताम् ४ अक्षताश्चसुरश्रेष्ठकुंकुमाक्ताःसुशोभिताः मयानिवेदिताभक्त्यागृहाणपरमेश्वरि ५ माल्यादीनिसुगंधीनिमालत्यादीनिवैशिवे मयाहृतानिपूजार्थं पुष्पाणिप्रतिगृ

ह्यताम् ६ वनस्पतिरसोत्पन्नःसुगंधाढ्योमनोहरः आघ्रेयःसर्वदेवानांधूपोऽयंप्रति
गृह्यताम् ७ साज्यंचवर्तिसंयुक्तंवह्निनायोजितंमया दीपंगृहाणदेवेशित्रैलोक्यति
मिरापहम् ८ शर्कराखंडखाद्यानिदधिक्षीरघृतानिच आहारंभक्ष्यभोज्यंचनैवेद्यंप्रति
गृह्यताम् ९ गंगाजलंसमानीतंसुवर्णकलशोद्धृतम् आचमनीयंदेवेशिप्रीत्यर्थंप्रतिगृ
ह्यताम् १० इदंफलंमयादेविस्थापितंपुरतस्तवतेनमेसुफलावाप्तिर्भवेज्जन्मनिजन्म
नि ११ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः अनंतपुण्यफलदमतःशांतिंप्रयच्छ
मे १२ यानिकानिचपापानिजन्मांतरकृतानिच तानितानिविनश्यंतिप्रदक्षिणपदेपदे
१३ पुष्पांजलिंनिवेद्यनतिंकुर्यात् इतिसंक्षेपतोगौरीपूजनं अथग्रहाणांस्थापनपूजनं
च तद्यथा रक्तपुष्पाक्षतान्गृहीत्वाआवाहयेत् सप्तम्यांविशाखान्वितायांकलिंगजा

तंकश्यपगोत्रंलोहितवर्णंवर्तुलाकृतिमंडलमध्यस्थं प्राङ्मुखंद्विभुजंपद्महस्तंसप्ताश्व रथवाहनं क्षत्रियाधिपतिं ईश्वराधिदैवतं अग्निप्रत्याधिदैवतसहितंसूर्यं आवाहया मि ॐ भूर्भुवःस्वः भगवन्सूर्येहागच्छइहतिष्ठइमंयज्ञमभिरक्ष इत्यावाह्य ॐ आकृ ष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच हिरण्ययेनसवितारथेनादेवोयातिभुवना निपश्यन् पद्मासनः पद्मकरः पद्मगर्भसमद्युतिःसप्ताश्वः सप्तरज्जुश्चद्विभुजः स्यात्सदा रविः १ इतिमंत्रेणपाद्यादिभिःसूर्यंसंपूज्यानेनैवमंत्रेणरक्तपताकादानम् इतिसूर्यं पूजनम् १ अथचंद्रावाहनं श्वेतपुष्पाक्षतान्गृहीत्वावाहयेत् ॐ चतुर्दश्यांकृत्तिकान्वि तायांसमुद्रजातमत्रिगोत्रंश्वेतवर्णं चतुरस्राकृतिंउमाधिदैवतंजलप्रत्याधिदैवतसहि तंचंद्रमावाहयामि ॐ भूर्भुवःस्वः चंद्रेहागच्छइहतिष्ठइमंयज्ञमभिरक्ष इत्यावाह्य

तंचंद्रमावाहयामि ॐ भूर्भुवःस्वः चंद्रइहागच्छइहतिष्ठइमंयज्ञमभिरक्ष इत्यावाह्य



ॐइमंदेवेतिमंत्रेणपाद्यादिभिश्चंद्रंसंपूज्यानेनैवमंत्रेणश्वेतपताकादानम् इतिचंद्रपू
जनम् २ अथभौमावाहनम् रक्तपुष्पाक्षतान्गृहीत्वा आवाहयेत् दशम्यांपूर्वाषा
ढान्वितायां अवंतीजातंभारद्वाजगोत्रंरक्तवर्णंत्रिकोणमण्डलाद्दक्षिणादिग्विभाग
स्थंदक्षिणाभिमुखंमेषवाहनंक्षत्रियाधिपतिंस्कन्दाधिदैवतंक्षितिप्रत्यधिदैवतसहितं
भौममावाहयामि ॐ भूर्भुवःस्वः भौमइहागच्छइहतिष्ठइमंयज्ञमभिरक्ष इत्यावा-
ह्य ॐ अग्निर्मूर्द्धेतिमंत्रेणपाद्यादिभिःभौमंसंपूज्य अनेनैवमंत्रेणरक्तपताकादानं
इतिभौमपूजनम्३अथबुधावाहनम् हरित्पुष्पाक्षतान्गृहीत्वाआवाहयेतद्वादश्यांध
निष्ठान्वितायांमगधदेशजातंअत्रिगोत्रंहरिद्वर्णंबाणाकृतिमण्डलात्पूर्वोत्तरस्थंउत्त-
राभिमुखंशूद्राधिपतिंसिंहवाहनं नारायणाधिदैवतं विष्णुप्रत्यधिदैवतसहितंबुधमा

वाहयामिॐभूर्भुवःस्वःबुधइहागच्छइहतिष्ठइमंयज्ञमभिरक्ष इत्यावाह्य ॐ उद्बुध्य स्वाग्नेइतिमंत्रेणपाद्याादिभिर्बुधंसंपूज्य अनेनैवमंत्रेणहरित्पताकादानंइतिबुधपूजनं ४ अथगुर्वावाहनंपीतपुष्पाक्षतान्गृहीत्वाआवाहयेत्एकादश्यांउत्तराफाल्गुनीयुतायांसिंधुदेशजातंआंगिरसगोत्रं गोरोचनाभं दीर्घचतुष्कोणाकृतिंमंडलादुत्तरस्थितमुत्तराभिमुखंसिंहवाहनंब्रह्माधिदेवतंइंद्रप्रत्यधिदेवतासहितंगुरुमावाहयामि ॐ भूर्भुवःस्वः गुरोइहागच्छइहतिष्ठइमंयज्ञमभिरक्ष इत्यावाह्य ॐ बृहस्पतेइतिमंत्रेण पाद्यादिभिःगुरुंसंपूज्य अनेनैवमंत्रेणपीतपताकादानं इतिगुरुपूजनम् ५ अथशुक्रावाहनम् श्वेतपुष्पाक्षतान्गृहीत्वाआवाहयेत् नवम्यांपुष्ययुतायांभोजकटजातंभार्गवगोत्रंशुक्लवर्णंपंचकोणमंडलात्पूर्वदिकस्थंपूर्वाभिमुखं श्वेताश्ववाहनंइंद्राणीप्रत्य

धिदेवतसहितंशुक्रंआवाहयामि ॐ भूर्भुवःस्वः शुक्रइहागच्छइहतिष्ठइमंयज्ञमभि
रक्षइ ० ॐ अन्नात्परीतिमंत्रेणपाद्यादिभिःशुक्रंसंपूज्यअनेनैवमंत्रेणश्वेतपताकादा
नं इतिशुक्रपूजनम् ६ अथशन्यावाहनम् बिल्वपत्राक्षतान्गृहीत्वाआवाहयेत अष्ट
म्यांरेवतीयुतायांसौराष्ट्रजातंकाश्यपगोत्रंलोहवर्णं धनुराकृतिंमण्डलात्पश्चिमस्थंप
श्चिमाभिमुखंगृध्रवाहनंसंकरजातियमाधिदेवतंप्रजापतिप्रत्यधिदैवतसहितंशनि
मावाहयामिॐभूर्भुवःस्वःशनेइहागच्छइहतिष्ठइमंयज्ञमभिरक्षइ ० ॐ शन्नोदेवीति
मंत्रेणपाद्यादिभिःशनिंसंपूज्यअनेनैवमंत्रेणकृष्णपताकादानम् इतिशनिपूजनम् ७
अथराहोरावाहनम् कृष्णपुष्पाक्षतान्गृहीत्वा आवाहयेत् पौर्णमास्यांभरणीयुतायां
बर्बरदेशजातं पैठीनसगोत्रं कृष्णवर्णंशूर्पाकृतिंमण्डलात्पश्चिमदक्षिणदिक्स्थंदाक्षि

णाभिमुखं शूद्राधिपतिं सिंहवाहनंकालाधिदैवतंसर्पप्रत्यधिदैवतसहितंराहुमावाहयामि ॐ भूर्भुवःस्वः राहोइहागच्छइहतिष्ठइमंयज्ञमभिरक्ष इत्यावाह्य ॐ कयानश्चित्रेतिमंत्रेणपाद्यादिभीराहुंसंपूज्याऽनेनैवमंत्रेणकृष्णपताकादानम् इतिराहुपूजनम् ८ अथकेत्वावाहनम् कृष्णपुष्पाक्षतान्गृहीत्वा आवाहयेत् अमावास्यायांआश्लेषान्वितायांजातंजैमिनिगोत्रं धूम्रवर्णं ध्वजाकृतिंकपोतवाहनं अंत्यजाधिपतिंमंडलात्पश्चिमोत्तरस्थंदक्षिणाभिमुखंचित्रगुप्ताधिदैवतंब्रह्मप्रत्यधिदैवतसहितंकेतुमावाहयामि ॐ भूर्भुवःस्वः केतोइहागच्छइहतिष्ठइमंयज्ञमभिरक्ष० ॐ केतुंकृण्वन्नेतिमंत्रेणपाद्याभिः केतुंसंपूज्य अनेनैवमंत्रेणधूम्रपताकादानम् इतिकेत्वंतनवग्रहाणांसंपूजनम् ॥ अथनंतरंगणेशकलशयोरीशानभागेयक्षेश्वरकलशस्था

पनं तद्यथा अश्वत्थगौरमृत्तिकापंचरत्नसर्वौषधिफलद्रव्यवस्त्राम्रपल्लवसंयुतंकलश मेशान्यांस्थापयेत् तत्रपठनीयोमंत्रः ॐ सूर्यायत्वायुषंनिर्वापयामि ॐ चंद्रायत्वायुषं निर्वापयामि अनेनैवमंत्रेणकलशमध्येपूर्वद्रव्याक्षतगंधपुष्पांतप्रक्षेपः अनेनैवकल शजलेनयज्ञांतेयजमानमभिषिंचेत ॥ इतिसंक्षेपतःपूजनाविधिः ॥ अथसर्वतोभद्रमंड लदेवता। अथपुराणोक्तमंडलदेवतालिख्यंते त्वंवैचतुर्मुखोब्रह्मासत्यलोकेपितामहः आगच्छमंडलेचास्मिन्ममसर्वार्थसिद्धये मध्येब्रह्माणं १ क्षीरोदार्णवसंभूतलक्ष्मीबं धोनिशाकर मंडलेस्थापयाम्यत्रसोमंसर्वार्थसिद्धये उत्तरेसोमं २ ईशानीपालकंश्रेष्ठं सर्वलोकभयंकरं मण्डलेस्थापयामीहईशानंसर्वसिद्धयेऐशान्यांईशानम् ३ सर्वलो काधिकंश्रेष्ठंदेवर्षीणांचपालकं पूर्वदिक्पालकंदेवराजानंस्थापयाम्यहं पू० इंद्रं ४ त्रि

पादंमेषवाहंचत्रिशिखंचत्रिलोचनंआग्नेय्यांस्थापयाम्यत्र आग्निपूरु१मुत्तमं इत्याग्ने
य्यामग्निं ५ अंतकःसर्वलोकानांधर्मराजइतिश्रुतःअतस्त्वांस्थापयाम्यत्रदक्षिणस्यां
स्थिरोभव इतिद० यमं ६ नैर्ऋत्यांवसतिर्यस्यघोररूपीसदाहिपःनैर्ऋतिंस्थापयाम्य
त्रनैर्ऋत्यांमंडलेशुभे इतिनैर्ऋत्यांनिर्ऋतिं ७अपांपतिंपाशधरंयादसांपतिकंशुभंवरु
णंस्थापयाम्यत्रवारुण्यांमंडलेशुभे इतिपश्चिमे वरुणं ८ आशुगंस्पर्शबोधंचगन्धवा
हंसुशीतलं मंडलेस्थापयामीहवायव्यांवायुमुत्तमं इतिवायव्यांवायुं ९ धरोध्रुवश्च
सोमश्चआशुगश्चनलोऽनलः प्रत्यूषश्चप्रभासश्चवसवश्चक्रमिहास्थिरं वायुसोमयोर्म
ध्येवसून् १० त्रिनेत्रायत्रिरूपायत्रिजटायमहात्मने नमस्कृत्वास्थापयामिमंडलो
परिमध्यतः सोमेशानयोर्मध्येरुद्रान् ११ आदित्यंभास्करंचैवप्रभाकरदिवाकरौ

पारमध्यतः सोमेशानयोर्मध्येरुद्रान् ११ आदित्यंभास्करंचैवप्रभाकरदिवाकरौ

सूर्यंग्रहपतिंसोमंब्रध्नंतेजोहरिन्द्वारिम सप्ताश्वंवेदमूर्तिंचान्निदैवत्यंक्रमेणच इत्यादिद्वा
दशादित्यान्मंडलेस्थापयाम्यहंईशानेंद्रयोर्मध्येद्वादशादित्यान् १२ अश्विनौदेववैद्यौ
चसर्गास्थित्यंतकारकौ मंडलेस्थापयित्वातुपूजयामिस्वसिद्धये इंद्राग्न्योर्मध्येअश्वि
नौ १३ दैवेकर्मणिपित्र्येचयौमुख्यौसर्वदाशुभौ मंडलेस्थापयामीहसुखानुष्ठानसि
द्धये अग्नियमयोर्मध्येविश्वान्देवान् १४ यदृच्छयापर्यटंतेयक्षराजामहीतले कौतुकं
प्रेक्षितुंचास्मिन्मंडलेसंतुसुस्थिराःयमनिर्ऋतिमध्येयक्षान् १५ अनंतोवासुकिश्चैव
कालीयोमणिभद्रकः शंखश्चशंखपालश्चकर्कोटकधनंजयौधृतराष्ट्रश्चनागेशाःप्रगृ
ह्णंतुममार्चनम् निर्ऋतिवरुणयोर्मध्येनागान् १६ उर्वशीप्रमुखाःसर्वाःस्ववेश्याःशक्र
पूजिताः गंधर्वैश्चसहायांतुमंडलेस्मिन्सुशोभनाः वरुणवाय्वोर्मध्येगंधर्वाप्सरसः

१७ त्र्यंबकंत्रिपुरुषंनीलकंठंसदाशिवम्मंडलेस्थापयामीहमुखानुष्ठानसिद्धये ब्रह्म
सोमयोर्मध्येरुद्रम् १८ षडाननंचतुर्हस्तंस्कंदंगौरीसुतंशुभं इहैवपूजयिष्यामिसर्वका
मार्थसिद्धये रुद्रसोमयोर्मध्येस्कंदं १९ शिवद्वारगतस्त्वंचशिववाहनमुत्तमं पार्वत्याः
प्रीतिकृन्नित्यमिहागच्छस्थिरोभव तत्रैवनंदिनंशूलमहाकालौच २० अदितिर्देवमा
तात्वंदक्षपुत्रीसुशोभनामंडलेऽस्मिन्समागच्छयावत्पूजांस्थिराभवतत्रैवादितिं २१
दक्षोऽसिसर्वकार्येषुमहायज्ञकरप्रियः ऋषिश्चसर्वदादक्षमंडलेस्मिन्नस्थिरोभव तत्रै
वदक्षं २२ तामग्निवर्णांतपसाज्वलंतींसर्वदाशुभां भक्तानांवरदांनित्यंदुर्गामावाहया
म्यहं ब्रह्मेंद्रयोर्मध्येदुर्गां २३ कृष्णायगोपिनाथायचक्रिणेमुरवैरिणे नमस्तुभ्यंजग
न्नाथमंडलेस्मिन्नस्थिरोभव तत्रकृष्णं २४ ब्रह्मानयोर्मध्येस्वधाम् २५ मृत्युरोगानंतक

स्यप्रेष्यान्प्राणहरान्गुणान् मंडलेस्थापयामीहपूजार्थेलोकनाशकान् ब्रह्मयमयोर्मध्येमृत्युरोगान्२६कुंकुमाभंसदानंदंभक्तसंकटनाशनं चतुर्बाहुंत्रिनेत्रंचमंडलेस्थापयाम्यहं ब्रह्मनिर्ऋतिमध्येगणेशं २७ पावनाःसर्वलोकानांनिमग्नाःशुद्धिकारकाः सर्वपापहराःश्रेष्ठामंडलेस्थापयाम्यहम् ब्रह्मवरुणयोर्मध्येअपः २८ सुगंधिनश्चशैलाद्यामंदमंदवहाःसदा तानहंस्थापयामीहमरुतोमंडलेशुभे ब्रह्मवाय्वोर्मध्येमरुतः २९ पृथिव्यांधार्यतेविश्वंदुर्ग्रहंसागरैर्नरैः अतस्त्वांस्थापयामीहब्रह्मणोमंडलेपदे ब्रह्मणःपादमूलेपृथिवीं ३० गंगेचयमुनेचैवगोदावरिसरस्वति नर्मदेसिंधुकावेर्योमंडलेस्थापयाम्यहं ब्रह्मणःपादमूलेनदीः ३१ समुद्रःसर्वतोयेषुश्रेष्ठोवैहरिवल्लभः मंडलेस्थापयामीहतंनदीशंसुखाप्तये ब्रह्मणःसमंतात्सप्तसागरान्क्षारसागरं क्षीरसा

गरं दधिसा० मधुसा० घृतसा० इक्षुसा० सुरासा० स्वादूदकसा० ३२ तदुपरिमेरुं नाममंत्रेण पूर्वादिदिक्षु इन्द्राणीं स्वाहां प्रमथां नैर्ऋतिं वारुणीं वायवीं कुबेरप्रियां रुद्राणीं पूर्वादिदिक्षु वज्रं शक्तिं दंडं खड्गं पाशं अंकुशं गदां त्रिशूलं ३३ पुनः पूर्वादिदिक्षु गजं मेषं महिषं शवं मकरं मृगं नरं वृषभं ३४ पुनः पूर्वादिदिक्षु ऐरावतं पुंडरीकं वामनं कुमुदं अंजनं पुष्पदंतं सार्वभौमं सुप्रतीकं ३५ पुनःपूर्वादिचतुर्दिक्षु गणपतिं सप्तमातॄः दुर्गां क्षेत्राधिपतिं पुनःपूर्वाद्यष्टदिक्षु कश्यपं अत्रिं भरद्वाजं विश्वामित्रं गौतमं जमदग्निं वसिष्ठं अरुंधतीं बाह्येपूर्वादिक्रमेण ऐंद्रीं कौमारीं ब्राह्मीं वाराहीं चामुंडां वैष्णवीं माहेश्वरीं वैनायकीं इत्यावाहयामि इतिसर्वतोभद्रमंडलदेवताःपाद्यादिभिःषोडशोपचारैःसंपूज्य नतिंकुर्यात् ॥ अथषोडशमातृकास्थापनं

देवताः पाद्यादिभिः षोडशोपचारैः संपूज्य नतिंकुर्यात् ॥ अथषोडशमातृकास्थापनं

पूजनंच गौरीपद्माशचीमेधासावित्रीविजयाजया देवसेनास्वधास्वाहामातरोलोक
मातरः धृतिःपुष्टिस्तथातुष्टिरात्मनःकुलदेवता गणेशेनाधिकाह्येताःवृद्धौपूज्यास्तुषो
डश इति पाद्यादिभिः संपूज्य नतिंकुर्यात ॥ अथस्थलमातृकाणांस्थापनंपूजनंच त
द्यथा ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा वाराहीचतथैंद्राणीचामुंडा सप्तमा
तरः ॥ अथघृतमातृकापूजनं कुड्यलग्नवसोर्द्धारापंचधाराघृतेनतु कारयेत्सप्तवाधा
रानातिनीचानचोच्छ्रिताः १ कीर्तिर्लक्ष्मीर्धृतिर्मेधासिद्धिःप्रज्ञासरस्वतीमांगल्येषुप्र
पूज्याश्चसप्तैताघृतमातरः २ ॐ वसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्र
धारं देवस्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुप्वाकामधुक्षः ॐ भूर्भुवः
स्वः घृतमातृभ्यो० आवाहनादिपंचोपचारैःसंपूज्य अनयापूजयाघृतमातरःप्रीयं

ताम् ॥ अथइंद्रध्वजपूजनं ईशानकोणेस्थापनंच ॥ अथचतुःषष्टिदेव्यावाहनंस्थाप
नंपूजनंच पाद्यादिभिःषोडशोपचारैःसंपूज्यनतिंकुर्यात् तद्यथा भोदेवताः सायुधाः
सपरिवाराः सवाहनाइहआगच्छत० आवाहिताभ्यश्चतुःषष्टिदेवताभ्यः पूजिता
भ्योनमः॥अथतासांनामानि गजानना १ सिंहमुखी २ गृध्रस्था ३ काकतुंडिका ४॥
उष्ट्रग्रीवा ५ हयग्रीवा ६ वाराही ७ शरभानना ८॥ उलूकीच ९ शिवाख्याच १० म
यूरी ११ विकटानना १२॥ अष्टवक्रा १३ कोटराक्षी १४ कुब्जा १५ विकटलोचना
१६॥ शुष्कोदरी १७ ललज्जिह्वा १८ श्वदंष्ट्रा १९ वानरानना २०॥ ऋक्षाक्षी २१ के
कराक्षीच २२ बृहत्तुंडा २३ सुराप्रिया २४॥ कपालहस्ता २५ रक्ताक्षी २६ शुकी २७
श्येनी २८ कपोतिका २९॥ पाशहस्ता ३० दंडहस्ता ३१ प्रचंडा ३२ चंडविक्रमा ३३॥

श्येनी २८ कपोतिका २९॥ पाशहस्ता ३० दंडहस्ता ३१ प्रचंडा ३२ चंडविक्रमा ३३॥



शिशुघ्नी ३४ पापहंत्रीच ३५ काली ३६ रुधिरपायिनी ३७ वसाधया ३८ गर्भभक्षा ३९ शवहस्ता ४० अंत्रमालिनी ४१ स्थूलकेशी ४२ बृहत्कुक्षिः ४३ सर्पास्या ४४ प्रेतवाहना ४५ दंतशूककरा ४६ क्रौंची ४७ मृगशीर्षा ४८ वृषानना ४९ व्यात्तास्या ५० धूमनिःश्वासा ५१ व्योमैकचरणा ५२ ऊर्ध्वदृक् ५३ तापिनी ५४ शोषिणीदृष्टिः ५५ कोटरी ५६ स्थूलनासिका ५७ विद्युत्प्रभा ५८ बलाकास्या ५९ मार्जारी ६० कटपूतना ६१ अट्टाट्टहासा ६२ कामाक्षी ६३ मृगाक्षीमृगलोचना ६४ नामानीमानियोमर्त्यश्चतुःषष्टिदिनेदिने। जपेत्रिसंध्यंतस्येहदुष्टबाधाप्रशाम्यति॥ १॥ अथप्रधानदेवताः आवाहनस्थापनपाद्यादिभिःसंपूज्यप्रतिमायाअग्न्युत्तारणंकृत्वापंचगव्येनशुद्धिःकार्या। ततःपंचामृतैःस्नापयेत् आवाहनंप्राणप्रतिष्ठाकार्या गंधाक्षतपुष्पधूप

दीपनैवेद्याचमनीयतांबूलदक्षिणाभिःपूजयेत् प्रधानदेवतापूजनप्रतिष्ठासांगतासि
द्ध्यर्थंयद्यदर्पिंततेनकर्मांगदेवताःप्रीयंतांनमम ॥ अथकुशकंडिकाकरणं शुद्धायांभू
मौदर्भैःपरिसमूहनं हस्तमात्रपरिमितांचतुरस्रांभूमिंकुशैःपरिसमुत्त्यताभैशान्यांप
रित्यज्य गोमयोदकेनोपलिप्य स्रुवमूलेनप्राङ्मुखंप्रादेशमात्रमुत्तरोत्तरक्रमेणात्रि
रुल्लिख्यउल्लेखनक्रमेणाऽनामिकांऽगुष्ठाभ्यामुद्धृत्य ऐशान्यांदिशिस्थापयेत् ततउद
केनाभ्युक्षणम् एतेपंचभूसंस्काराःयत्रयत्राग्निस्थापनंतत्रतत्राक्रियंते ॥ अथाग्नेः
स्थापनम् ॥ वामहस्तानामिकयाभूमिंस्पृशन्सन्ताम्रादिपात्रेणकृतमाग्निमानीया
त्माभिमुखंनिदध्यात् तद्रक्षार्थंकिंचिन्नियुज्यआनीताग्निपात्रेअक्षतादिप्रक्षेपः ततो
ऽग्निप्रदक्षिणीकृत्यपुष्पचंदनतांबूल[illegible]यादाय अग्नेर्दक्षिणतोवस्त्रास

ऽग्निप्रदक्षिणीकृत्यपुष्पचंदनतांबूलपूगीफलद्रव्यवस्त्राण्यादाय अग्नेर्दक्षिणतोवस्त्रास



नास्तरणंकल्पयित्वा ब्राह्मणंपादप्रक्षालनगंधमाल्यादिभिरभिपूज्यहस्तेधौतवस्त्रो-
त्तरीयकमंडलुभूषणादिकंगृहीत्वाॐअद्यकर्तव्यामुकहवनकर्मणिकृताकृतावेक्षणरूप
ब्रह्मकर्मकर्तुममुकगोत्रममुकशर्माणंब्राह्मणमेभिर्द्रव्याक्षतपूगफलवासोभिर्ब्रह्मत्वे न-
त्वामहंवृणे इतिब्राह्मणंवृणुयात । ततोवृतोऽस्मिइतिप्रतिवचनंब्रतेनदीक्षामाप्नोति
दीक्षयाप्नोतिदक्षिणां दक्षिणाश्रद्धामाप्नोतिश्रद्धयासत्यमाप्यते।ततःकर्ताब्रह्माणंप्र
तियथाविहितंकर्मकुरुइत्युक्तेकरवाणीतिब्रह्माब्रूयात ततोऽस्मिन्कर्मणित्वंमेब्रह्मा
भवेत्यभिधाय भवामिइतितेनोक्तेअग्नेर्दक्षिणतःकल्पितासनोपरिउपवेशयेत् ततः
प्रणीतापात्रं वारुणकाष्ठमयंद्वादशांगुलोच्चंचतुरंगुलमध्यखातंपद्माकृतिंपुरतःकृत्वा
जलेनापूर्यकुशैराच्छाद्य ब्रह्मणोमुखमवलोक्य अग्नेरुत्तरतःकुशोपरिनिदध्यात ततः

बर्हिषापरिस्तरणम् बर्हिषः कोऽर्थः एकाशीतिदर्भदलानिसंति तेषांचतुर्थभागंकृत्वा एकेनदर्भेणशुन्यहस्तोनभवति प्रथमभागमादाय आग्नेय्यादीशान्यंतम् १ द्वितीयभागमादाय ब्रह्मणोऽग्निपर्यन्तम् २ तृतीयभागमादायनैर्ऋत्याद्वायव्यन्तम् ३ चतुर्थभागमादाय अग्नितः प्रणीतापर्यन्तम् ४ परिस्तरणंकुर्यात् ततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थंकुशत्रयंपवित्रकरणार्थंसाग्रमनन्तर्गर्भंकुशपत्रद्वयम् प्रोक्षणीपात्रं आज्यस्थालीचरुस्थालीसंमार्जनकुशाः पंचउपयमनकुशाः सप्त समिधस्तिस्त्रःप्रादेशमात्राः स्त्रुवः खादिरः आज्यं षट्पंचाशदुत्तरशतद्वयमुष्टयवच्छिन्नतंदुलपूर्णपात्रं दक्षिणावरोवापवित्रच्छेदनकुशानांपूर्वपूर्वदिशिक्रमेणासादनीयम् अथत्रिभिःपवित्रच्छेदनकुशैर्द्वेपवित्रेछित्वासपवित्रकरेणप्रणीतोदकंत्रिः प्रोक्षणीपात्रेनिधाय प्रो-

क्षणीपात्रंवामहस्तेकृत्वा दक्षिणहस्तानामिकांगुष्ठाभ्यां पवित्रेगृहीत्वा त्रिरुत्पवनं
ततः प्रोक्षणीपात्रं आकाकवत् प्रणीतोदकेनापूर्य भूमौपतिततदाप्रायश्चितंगोदान
म् ततः प्रोक्षणीजलेन यथासादितवस्तुरूपंसेचनम् ततोऽग्निप्रणीतयोर्मध्येप्रोक्ष
णीपात्रंनिदध्यात् आज्यस्थाल्यामाज्यनिर्वापः चरुपात्रेचरुप्रक्षेपः आज्याऽधिश्रय
णम् ततोज्वलत्तृणमादाय आज्यस्योपरिप्रदक्षिणंभ्रामयित्वा वह्नौतत्प्रक्षेपः । त
तःस्रुवप्रतपनंकृत्वा संमार्जनकुशैः स्रुवसंमार्जनं मूलेनमूलं मध्येनमध्यं अग्रेणाग्रं
पुनः प्रतप्यस्रुवंदक्षिणतोनिदध्यात्। ततःआज्योत्तरणं अवेक्षणं अपद्रव्यनिरसनम्
तत उपयमनकुशानादायवामहस्तेकृत्वा अग्निपर्युक्षणंकृत्वा उत्तिष्ठन्मनसाप्रजाप
तिंध्यात्वा तूष्णीमग्नौघृताक्ताःसमिधस्तिस्त्रःक्षिपेत् उपविश्यसपवित्रप्रोक्षण्युदके

नाग्निंपर्युक्षणीकृत्वा पवित्रंप्रणीतापात्रेनिधाय पातितदक्षिणजानुः कुशेनब्रह्मणा न्वारब्धः समिद्धतमेऽग्नौस्रुवेणाज्याहुतिंजुहोति तत्राघारादारभ्यद्वादशाहुतिषु अनं तरंस्रुवस्थितशेषघृतस्यप्रोक्षणीपात्रेप्रक्षेपः । इतिकुशकण्डिकापद्धतिः॥अथसमिद्वि धिः समिदर्कमयीभानोःपालाशीशशिनस्तथा । खादिरभूमिपुत्रस्य आपामार्गी बुधस्यच॥गुरोरश्वत्थजाप्रोक्ताशुक्रस्यौदुम्बरीमता । शमीजातुशनेःप्रोक्ताराहोर्दू र्वामयीतथा ॥ केतोर्दर्भमयीप्रोक्ताऽन्येषांपालाशवृक्षजा॥१॥ आर्कीनाशयतेव्या धिंपालाशीसर्वकामदा । खादिरअर्थलाभायापामार्गीष्टप्रदर्शिनी ॥ प्रजालाभा यचाश्वत्थीस्वर्गायौदुंबरीभवेत्॥शमीशमयतेपापंदूर्वादीर्घायुरेवच ॥ कुशाःसर्वार्थ कामानांपरमंरक्षणंविदुः ॥ २ ॥ यथाबाणप्रहाराणांकवचंवारणंभवेत । तद्वद्दैवोप

घातानांशांतिर्भवतिवारणम्॥ ३॥यथासमुत्थितंयंत्रंयंत्रेणप्रतिहन्यते। तथासमुत्थि
तंघोरंशीघ्रंशांत्याप्रशाम्यति ॥४॥ अथाग्न्यावाहनं ॥ ततःकुंडमध्ये ॐ रं इतिवह्नि
बीजंलिखेत उत्पत्तिमुद्रांकृत्वाऽथावाहयेदाग्निपूरुषम् । रुद्रतेजःसमुद्भूतंद्विमूर्धानंद्वि
नासिकम् । स्रुचंस्रुवंचशक्तिंचअक्षमालांचदक्षिणैः ॥ तोमरंव्यजनंचैवघृतपात्रंतुवा
मकैः । बिभ्रतंसप्तभिर्हस्तैर्द्विमुखंसप्तजिह्वकम् ॥ दक्षिणंचचतुर्जिह्वंत्रिजिह्वमुत्तरंमु
खम्।द्वादशकोटिमूर्त्याख्यांद्विपंचाशत्कलायुतम् ।स्वाहास्वधावषट्कारैरंकितंमेषवा
हनम्॥रक्तमाल्यांबरंरक्तंरक्तपद्मासनास्थितम्। रौद्रंवागीश्वरीरूपंवह्निमावाहयाम्य
हम् ॥ त्वंमुखंसर्वदेवानांसप्तार्चिरमितद्युते।आगच्छभगवन्नग्नेयज्ञेऽस्मिन्संनिधौभ
व ॥ अग्नेवैश्वानरइहागच्छइहातिष्ठ इत्यावाह्यपंचोपचारैःपूजयेत् ॥ततःअग्नेःसप्त

जिह्वानांपूजा॥कनकायैनमः रक्तायैनमः कृष्णायैनमः उदीरण्यायैनमः उत्तरमुखे सुप्रभायैनमः बहुरूपायैनमः अतिरिक्तायैनमः तदनंतरंस्रुवमसमिद्धनस्पतीनांपूजनं चइति ॥ ॐ अद्येत्यादि अमुकगोत्रोऽमुकनामाहंसकुटुंबस्य सपरिवारस्यात्मनः सदाऽभीष्टफलप्राप्त्यर्थं अमुकयज्ञकर्मणाश्रीसूर्यादिनवग्रहादीनां साधिदेवताप्रत्यधिदेवतानांपंचलोकपालदशदिक्पालामुकप्रधानदेवतासहितानांचप्रीतये ब्राह्मणद्वारा यवतिलधान्याज्यशर्करादिद्रव्यैस्तत्तद्देवतामंत्रैर्यक्ष्ये ततोमनसिव्याहृतिभिराहुतीर्दद्यात् ॥ अथहोमः ॐ प्रजापतयेस्वाहा इदंप्रजापतयेनमम ॐ इंद्रायस्वाहा इदमिंद्रायनमम ॐ अग्नयेस्वाहा इदमग्नयेन० ॐ सोमायस्वाहा इदंसोमायनमम ॐ भूःस्वाहा इदमग्नयेनमम ॐ भुवःस्वाहा इदंवायवेनमम ॐ स्वःस्वाहा इदं

ममम ॐ भूःस्वाहा इदमग्नयेनमम ॐ भुवःस्वाहा इदंवायवेनमम ॐ स्वःस्वाहा इदं

सूर्यायनमम । एतामहाव्याहृतयः ॥ यथाबाणप्रहाराणांकवचंवारणंभवेत । तद्वद्दै
वोपघातानांशांतिर्भवतिवारणम्॥शांतिरस्तु पुष्टिरस्तु वृद्धिरस्तु यत्पापंतत्प्रतिहत
मस्तु द्विपदेचतुष्पदेसुशांतिर्भवतु इतिप्रायश्चित्तहोमः ॥ अथपंचवारुणीहोमः ॐ
त्वंनोऽग्नेव्वरुणस्यव्विद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोव्वह्नितमःशोशु
चानोव्विश्वाद्वेषा ᳪसिप्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्याम्० १ ॐ सत्वन्नोऽ
अग्नेव्वमोभवोतीनेदिष्ठोऽअस्याउषसोव्युष्टौ अवयक्ष्वनोव्वरुण ᳪ रराणोव्वीहि
मृडीक ᳪ सुहवोनएधिस्वाहा इदमग्नीवरुणाभ्याम्० २ ॐ अयाश्चाग्नेस्यनभि
शस्तिपाश्चसत्वमित्वमयाअसि अयानोयज्ञं वहास्ययानोधेहिभेषज ᳪ स्वाहा
इदमग्नये० ३ ॐ येतेशतंवरुणयेसहस्रंयज्ञियःपाशाविततामहांतः तेभिर्नोअद्य

सवितोत्ताविष्णुर्विश्वेमुंचंतुमरुतःस्वर्काःस्वाहा इदं वरुणायसावित्रेविष्णवेविश्वेभ्यो देवेभ्योमरुद्भ्यःस्वर्केभ्यश्च॰ ४ ॐ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यम ँ श्रथाय अथाव्वयमादित्यव्रतेतवानागसोअदितयेस्यामस्वाहा इदंवरुणायादित्यायादितये॰ ५ अत्रोदकस्पर्शः इतिपंचवारुणीहोमः ॥ अथ नवग्रहाणांहोमः तत्रादौनवग्रहाणांसमिधः अर्कःपलाशःखादिरअपामार्गोऽथपिप्पलः । औदुंबरः शमीदूर्वाःकुशाश्चसमिधःक्रमात् ॥ ततोघृताक्ताः समिधाजुहुयात् ॐ आकृष्णेन रजसाव्वर्तमानोनिवेशयन्नमृतंमर्त्यंच हिरण्ययेनसवितारथेनादेवोयातिभुवनानि पश्यन्स्वाहा इदंसू॰ ॐ इमंदेवाअसपत्न ँ सुवध्वंमहतेक्षत्रायमहतेज्यैष्ठ्यायमहते जानराज्यायेन्द्रस्येंद्रियायइमममुष्यपुत्रममुष्यैपुत्रमस्यैविशएषवो मीराजासोमाऽ

स्माकंब्राह्मणाना ः राजास्वाहा इदंचंद्रा० ॐ अग्निर्मूर्द्धादिवःककुत्पतिःपृथिव्या-
अयम् अपा ः रेता ः सिजिन्वतिस्वाहा इदंमंगला०ॐउद्बुध्यस्वाग्नेप्रतिजागृहि
त्वमिष्टापूर्तेस ः सृजेथामयंच अस्मिन्त्सधस्थेअध्युत्तरास्मिन्विश्वेदेवायजमानश्च
सीदतस्वाहा इदंबुधा० ॐ बृहस्पतेअतियदर्योअर्हाद्युमद्विभातिक्रतुमज्जनेषु यद्दीद
यच्छवसऋतप्रजाततदस्मासुद्रविणंधेहिचित्र ः स्वाहा इदंबृहस्पतये० ॐ अ
न्नात्परिस्रुतारसंब्रह्मणाव्यपिबत्क्षत्रंपयःसोमंप्रजापतिः ऋतेनसत्यमिंद्रियंविपान
ः शुक्रंधसइंद्रस्येंद्रियमिदंपयोमृतंमधुस्वाहा इदंशुक्राय ॐ शन्नोदेवीरभिष्टयआ
पोभवन्तुपीतये शंयोरभिस्रवंतुनःस्वाहा इदंशनैश्चराया० ॐ कयानश्चित्रआभु-
वदूतीसदावृधःसखा कयाशचीष्ठयावृतास्वाहा इदंराहवे० ॐ केतुंकृण्वन्नकेतवे

पेशोमर्य्याअपेशसे समुषद्भिरजायथाः स्वाहा इदंकेतवे० इतिनवग्रहाणांहोमः ॥ अथनवग्रहाऽधिदेवतानांहोमः ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्द्धनम् उर्व्वारुकमिवंबधनान्मृत्योर्मुक्षीयमामृतात्स्वाहा इदंत्र्यंबकाय० ॐ श्रीश्चतेलक्ष्मीश्चपत्न्याव्वहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् इष्णंनिषाणामुम्मइषाणसर्वलोकंमइषाणस्वाहा इदंउमायै० ॐ यदक्रंदःप्रथमंजायमानउद्यन्त्समुद्रादुतवापुरीषात् श्येनस्यपक्षाहरिणस्यबाहूउपस्तुत्यंमहिजातंतेअर्व्वन्स्वाहा इदंस्कंदाय० ॐ विष्णोरराटमसिविष्णोःश्नप्त्रेस्थोव्विष्णोःस्यूरसिव्विष्णोध्रुवोऽसिवैष्णवमसिविष्णवेत्वास्वाहा इदंविष्णवे० ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतः सुरुचोव्वेनआवः सबुन्ध्याउपमाअस्यव्विष्ठाःसतश्चयोनिमसतश्चविवः स्वाहा इदंब्रह्मणे० ॐ त्रातारमिन्द्र

उपमा अस्या विष्ठाः सतश्च योनिमसतश्च विवः स्वाहा इदंब्रह्मणे० ॐ त्रातारमिन्द्र

मवितारमिन्द्रं ँ हवेहवेसुहव ँ शूरमिंद्रं ह्वयामिशक्रंपुरुहूतमिंद्र ँ स्वस्तिनोमघ
वाधातिवन्द्रः स्वाहा इदमिन्द्राय० ॐ असियमोअस्यादित्यो अर्वन्नसित्रितोगुह्येन
व्रतेन असिसोमेनसमयाविपृक्तआहुस्तेत्रीणिदिविबंधनानिस्वाहा इदंयमाय० अ
त्रोदकस्पर्शः ॐ काषिरसिसमुद्रस्यत्वाक्षित्याउन्नयामि समापोअद्भिरग्मतसमो
षधीभिरोषधीः स्वाहा इदंकालाय० अत्राप्युदकस्पर्शः ॐ इंधनास्त्वाशत ँ हिमा
द्युमंत ँ समिधीमहि वयस्वंतोवयस्कृत ँ सहस्वंतसहस्कृतं अग्नेसपत्नदंभनमद
ब्धासोअदाभ्यं चित्रावसोस्वस्तितेपारमशीयस्वाहा इदंचित्रगुप्ताय० इतिनवग्रहा
ऽधिदेवतानांहोमः ॥ अथनवग्रहप्रत्यधिदेवतानांहोमः ॐ अग्निंदूतंपुरोदधेहव्यवाह
मुपब्रुवे देवाँ २ आसादयादिहस्वाहा इदमग्नये० ॐ अप्स्वंतरमृतमप्सुभेषजमपा

मुतप्रशस्तिष्वश्वा भवतंवाजिनः देवीरापोयोवऊर्मिः प्रतर्तिः ककुन्मान्वाजसास्ते नायंवाय ँ सेत्स्वाहा इदमद्भ्यः ० ॐ स्योनापृथिविनोभवान्तक्षरौंनिवेशनी यच्छा नःशर्मसप्रथाःस्वाहा इदंपृथिव्यै० ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं समूढमस्य पा ँसुरेस्वाहा इदंविष्णवे० ॐ सजोषाइन्द्रसगणोमरुद्भिः सोमंपिबवृत्रहाशूरवि द्वान् जहिशत्रूँरपमृधोनुदस्वाथाभयंकृणुहिविश्वतोनः स्वाहा इदमिन्द्राय० ॐअ दित्यैरास्नासीन्द्राण्याउष्णीषःपूषासिघर्मायदीष्वस्वाहा इदमिन्द्राण्यै०ॐप्रजापते नत्वदेतान्यन्योविश्वारूपाणिपरिताबभूव यत्कामास्तेजुहुमस्तन्नोअस्तुव्वयंस्या मपतयोरयीणा ँ स्वाहा इदंप्रजापतये० ॐ नमोऽस्तुसर्पेभ्योयेकेचनपृथिवीमनु ये अंतरिक्षेयेदिवितेभ्यः सर्पेभ्योनमः स्वाहा इदंसर्पेभ्यः० ॐब्रह्मजज्ञानंप्रथमंपुरस्ता

द्विसीमतःसुरुचोऽवेनआवः सबुध्न्याउपमाअस्यविष्ठाः सतश्चयोनिमसतश्चविवः
स्वाहा इदंब्रह्मणे०इतिनवग्रहप्रत्याधिदेवतानां होमः ॥ अथपंचलोकपालानांहोमः
ॐ गणानांत्वागणपति ँ हवामहेप्रियाणांत्वाप्रियपति हवामहेनिधीनांत्वानि
धिपति ँ हवामहेऽवसोमम आहमजानिगर्भधमात्वामजासिगर्भधंस्वाहा इदंगणप
तये०ॐ अम्बेअम्बिकेऽम्बालिकेनमानयतिकश्चन ससस्त्यश्वकः सुभद्रिकांकांपी
लवासिनींस्वाहा इदंदुर्गायै० ॐ वातोवामनोवागंधर्वाः सप्तविशँतिः तेअग्रेश्व-
मयुञ्जँस्ते अस्मिञ्जवमादधुःस्वाहा इदंवायवे० ॐ उर्ध्वाऽस्यसमिधोभवन्त्यूर्ध्वा
शुक्राशोचि ँ ष्यग्नेः द्युमत्तमासुप्रतीकस्यसूनोः स्वाहा इदमाकाशाय० ॐ अ
श्विनोभैषज्येनतेजसेब्रह्मवर्चसायाभिषिंचामिसरस्वत्यैभैषज्येनवीर्यायान्नाद्याया

भिषिंचामीन्द्रस्येन्द्रियेणबलायश्रियैयशसेऽभिषिंचामिस्वाहा इदमश्विभ्यां० इति पंचलोकपालानांहोमः अथदशदिक्पालानांहोमः ॐ त्रातारमिन्द्रमवितारमिन्द्र ँ हवेहवेसुहव ँ शूरमिन्द्रं ह्वयामिशक्रंपुरुहूतमिन्द्र ँ स्वस्तिनोमघवाधात्विन्द्रःस्वाहा इदमिन्द्रायनमम ॐ अग्निंदूतंपुरोदधेहव्यवाहमुपब्रुवे देवाँ २ आसादयादिह स्वाहा इदमग्नयेनमम ॐ असियमोअस्यादित्योअर्वन्नसित्रितोगुह्येनव्रतेन असि सोमेनसमयाविपृक्तआहुस्तेत्रीणिदिविबंधनानिस्वाहा इदंयमाय० ॐ एषतेनिर्ऋते भागस्तंजुषस्वस्वाहाऽग्निनेत्रेभ्योदेवेभ्यःपुरःसद्भ्यःस्वाहा यमनेत्रेभ्योदेवेभ्योदाक्षिणासद्भ्यःस्वाहा विश्वेदेवनेत्रेभ्योदेवेभ्यःपश्चात्सद्भ्यः स्वाहामित्रावरुणनेत्रेभ्योवा मरुन्नेत्रेभ्योवादेवेभ्यउत्तरासद्भ्यः स्वाहा सोमनेत्रेभ्योदेवेभ्यउपरिसद्भ्योदुवः स्वं

तस्तेभ्यः स्वाहा इदंनिर्ऋतये० ॐ इदंमेवरुणश्रुधीहवमद्याचमृडय त्वामवस्युराच
केस्वाहा इदंवरुणाय० ॐ वायुरग्रेगायज्ञप्रीः साकंगन्मनसायज्ञं शिवोनियुद्भिः शि
वाभिःस्वाहा इदंवायवे० ॐ कुविदंगयवमन्तोयवंचिद्यथादांत्यनुपूर्वंवियूय इहेहैषां
कृणुहिभोजनानियेबर्हिषोनमउक्तिंयजंतिस्वाहा इदंकुबेराय० ॐ ईशावास्यमिदं
सर्वंयत्किंचजगत्यांजगत् तेनत्यक्तेनभुंजीथामागृधःकस्यस्विद्धनंस्वाहा इदमीशा
नाय० अत्रोदकस्पर्शः ॐ नमोऽस्तुसर्पेभ्योयेकेचपृथिवीमनु येअंतारिक्षेयेदिवि
तेभ्यःसर्पेभ्योनमः स्वाहा इदमनंताय० ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतः सुरु
चोवेनआवःसबुध्न्याऽऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवःस्वाहा इदं
ब्रह्मणे०इतिदशदिक्पालानांहोमः ॥ अथप्रधानदेवस्यहोमः ॐ नमोभगवतेवासु

देवायस्वाहा शांताकारंभुजगशयनंपद्मनाभंसुरेशंविश्वाधारंगगनसदृशंमेघवर्णं शुभांगम् ॥ लक्ष्मीकांतंकमलनयनंयोगिभिर्ध्यानगम्यंवंदेविष्णुंभवभयहरंसर्व लोकैकनाथम् ॥१॥ॐ नमः शिवाय ध्यायेन्नित्यंमहेशंरजतगिरिनिभंचारुचंद्रावतंसं रत्नाकल्पोज्ज्वलांगंपरशुमृगवराभीतिहस्तंप्रसन्नम् ॥ पद्मासीनंसमंतात्स्तुतममर गणैर्व्याघ्रकृत्तिंवसानांविश्वाद्यंविश्ववंद्यंनिखिलभयहरंपंचवक्त्रंत्रिनेत्रम् २ तत्रदुर्गो त्सवे ॐ जयंतीमंगलाकालीभद्रकालीकपालिनी । दुर्गाक्षमाशिवाधात्रीस्वाहा स्वधानमोऽस्तुते ॥ अमुकप्रधानदेवतायैस्वाहा० अथानंतरंव्याहृतिहोमः ॐ भूःस्वाहा इदमग्नये० ॐ भुवः स्वाहा इदंवायवेनमम ॐ स्वः स्वाहा इदंसूर्याय० इतिव्याहृतिहोमः ॥ अथसर्वतोभद्रमंडलदेवतानांहोमः गणपतयेस्वा० दुर्गायै

स्वा० ब्रह्मणे० सोमाय० ईशानाय० इन्द्राय० अग्नये० यमाय० निर्ऋतये०
वरुणाय० वायवे० ध्रुवाय० अध्वराय० सोमाय० अद्भ्यः० अनिलाय० नला
यस्वाहा प्रत्यूषायस्वा० प्रभासायस्वा० अजाय० एकपदे० अहिर्बुध्न्याय० विरूपा
क्षाय० रैवतायस्वा० रहायस्वा० बहुरूपाय० त्र्यंबकाय० सुरेश्वराय० सावित्रे०
जयंताय० पिनाकिने० रुद्रायस्वा० धात्रेस्वा० मित्रायस्वा० यमाय० रुद्राय०
वरुणाय० सूर्य्याय० भगाय० विवस्वतेस्वा० पूष्णेस्वा० सवित्रेस्वा० त्वष्ट्रे०
विष्णवे० अश्विभ्यां० क्रतवे० दक्षाय० वसवे० सत्यायस्वा० कालायस्वा० कामा
यस्वा० अध्वराय० रोचनाय० पुरूरवसे० आर्द्रवाय० सोमपायस्वा० अग्निष्वा
त्तायस्वा० बर्हिषदे० सुकलाय० एकशृंगाय० शूद्राय० सोमाय० कश्यपाय० अ

त्रये॰ भरद्वाजाय॰ विश्वामित्राय॰गौतमाय॰ जमदग्नये॰ वसिष्ठाय॰ अनंताय॰
वासुकये॰ शेषाय॰ तक्षकाय॰ कर्कोटकाय॰ पद्माय॰ महापद्माय॰ शंखपालाय॰
कंबलाय॰ पिशाचेभ्यः॰ गुह्यकेभ्यः॰सिद्धेभ्यः॰ भूतेभ्यः॰सर्पेभ्यः॰ विश्वावसवे॰
गंधर्वाय॰ हाहै॰ हूहे॰ घृताच्यै॰ मेनकायै॰ रंभायै॰ उर्वश्यै॰ तिलोत्तमायै॰ सु
केश्यै॰ मंजुघोषायै॰रुद्रेभ्यः॰ स्कंदाय॰ नंदीश्वराय॰ शूलाय॰ महादेवाय॰ रु
द्राय॰ श्रियै॰ विष्णवे॰ मरुद्गणाय॰ पितृभ्यः॰ रोगाय॰ मृत्यवे॰ रोगाय॰ व
सुभ्यः॰ विघ्नराजाय॰ अद्भ्यः॰समीराय॰ मारुतायस्वाहा मरुतेस्वा॰ जगत्प्रा
णाय॰ समीरणायस्वाहा मातारिश्वने॰ मेदिन्यै॰ गंगायैस्वाहा सरस्वत्यै॰शरय्वै॰
कौशिक्यै॰ वेत्रवत्यै॰ गोदायै॰ ताप्यै॰ रेवायै॰ पयोदायै॰ कृष्णायै॰ भीमर

कौशिक्यै० वेत्रवत्यै० गोदायै० ताप्त्यै० रेवायै० पयोदायै० कृष्णायै० भीमर



थ्यै० तुंगभद्रायै० क्षुद्रनदीभ्यः० लवणसमुद्राय० इक्षुसमुद्राय० सुरासमुद्राय० सर्पिःसमुद्राय० दधिसमुद्राय० क्षीरसमुद्राय० जीवनसमुद्राय० आदित्याय० सोमाय० भौमाय० बुधाय० बृहस्पतये० शुक्राय० शनैश्चराय० राहवे० केतवे० ब्राह्मयै० माहेश्वर्यै० कौमार्यै० वैष्णव्यै० वाराह्यै० इंद्राण्यै० चामुंडायै० वज्रायै० शक्तये० दंडाय० खड्गाय० पाशाय० अंकुशाय० गदायै० त्रिशूलाय० पद्माय० चक्राय० श्रीमहाविष्णवेस्वाहा ॥ अथदशदिक्पालादीनांबलिदानम् तद्यथा पूर्वेइ न्द्रायसांगायसपरिवारायसायुधायसशक्तिकायएतंसदीपंदधिमाषभक्तबलिंसमर्प यामिभोइन्द्रदिशंरक्षबलिंभक्षअस्यसकुटुंबस्यआयुष्कर्ताशांतिकर्तापुष्टिकर्तावरदो भव १ आग्नेय्यांअग्नयेसांगायसपरिवारायसायुधायसशक्तिकायएतंसदीपंदधि

माषभक्तबलिंसमर्पयामि भोअग्नेदिशंरक्षबलिंभक्षयजमानस्यसकुटुंबस्यआयुष्कर्ताक्षेमकर्ताशांतिकर्तातुष्टिकर्तापुष्टिकर्तावरदोभव २ दक्षिणेयमायसांगायसपरिवारायसायुधायसशक्तिकायएतंसदीपंदधिमाषभक्तबलिंसमर्पयामि भोयमदिशंरक्षबलिंभक्षयजमानस्य सकुटुंबस्य आयुष्कर्तातुष्टिकर्तापुष्टिकर्तावरदोभव ३ नैर्ऋत्यांनिर्ऋतयेसांगायसपरिवारायसायुधायसशक्तिकायएतंसदीपंदधिमाषभक्तबलिंसमर्पयामि भोनिर्ऋतेदिशंरक्षबलिंभक्षअस्ययजमानस्यसकुटुंबस्य आयुष्कर्ता क्षेमकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदोभव ४ पश्चिमेवरुणायसांगायसपरिवारायसायुधायसशक्तिकायएतंसदीपंदधिमाषभक्तबलिंसमर्पयामि भो वरुणदिशंरक्षबलिंभक्षअस्ययजमानस्यसकुटुम्बस्य आयुष्कर्ता क्षेमकर्ता शांतिक-

वरुणादिशंरक्षबलिंमक्ष अस्ययजमानस्यसकुटुम्बस्य आयुष्कर्ता क्षेमकर्ता शांतिक-



र्तातुष्टिकर्ता पुष्टिकर्तावरदोभव ५ वायव्यां वायवेसांगायसपरिवाराय सायुधाय सशक्तिकायएतंसदीपंदधिमाषभक्तबलिंसमर्पयामि भोवायोदिशंरक्षबलिंमक्ष अस्ययजमानस्यसकुटुम्बस्य आयुष्कर्ता क्षेमकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ताव रदोभव ६ उत्तरेकुबेरायसांगायसपरिवारायसायुधायसशक्तिकायएतंसदीपंदधि माषभक्तबलिं समर्पयामि भोकुबेरदिशंरक्षबलिंमक्ष अस्ययजमानस्यसकुटुंबस्य आयुष्कर्ता क्षेमकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदोभव ७ ईशान्यां ईशाना यसांगायसपरिवारायसायुधायसशक्तिकाय एतंसदीपंदधिमाषभक्तबलिंसमर्पया मि भोईशानदिशंरक्षबलिंमक्षअस्ययजमानस्यसकुटुंबस्य आयुष्कर्ता क्षेमकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदोभव ८ ईशानपूर्वयोर्मध्येब्रह्मणेसांगायसपरि

वारायसायुधायसशक्तिकायएतंसदीपंदधिमाषभक्तबलिंसमर्पयामि भोब्रह्मन्दि शंरक्षबलिंभक्षअस्ययजमानस्यसकुटुंबस्य आयुष्कर्ता क्षेमकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदोभव ९ निर्ऋतिपश्चिमयोर्मध्येअनंतायसांगायसपरिवाराय सायुधायसशक्तिकायएतंसदीपंदधिमाषभक्तबलिंसमर्पयामि भोअनंतदिशंरक्षबलिंभक्षअस्ययजमानस्यसकुटुंबस्य आयुष्कर्ता क्षेमकर्ता शांतिकर्ता तुष्टिकर्ता पुष्टिकर्ता वरदोभव १० इतिदशदिक्पालबलिः ॥ अथनवग्रहबलिः ग्रहेभ्यःसांगेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः एतंसदीपंदधिमाषभक्तबलिंसमर्पयामि भोग्रहाः दिशोरक्षध्वं बलिंभक्षध्वं अस्ययजमानस्यसकुटुंबस्य आयुष्कर्तारः शांतिकर्तारः तुष्टिकर्तारः पुष्टिकर्तारः वरदाभवत इतिग्रहादिबलिः ॥

दुर्गायैसांगायैसपरिवारायैसायुधायैसशक्तिकायै एतंसदीपदधिमाषभक्तबलिंसम
र्पयामि भोदुर्गे दिशंरक्षबलिंभक्षअस्ययजमानस्यकुटुंबस्यआयुष्कर्त्री क्षेमकर्त्री
शांतिकर्त्री तुष्टिकर्त्री पुष्टिकर्त्री वरदाभव इतिदुर्गायैबलिंदद्यात् ॥ अथक्षेत्रपालब
लिः दधिमाषसिंदूरकज्जलदीपद्रव्यसहितंपात्रेनिधाय क्षेत्रपालायशाकिनीडाकि
नीभूतप्रेतवेतालपिशाचसहितायइमंबलिंसमर्पयामि भोक्षेत्रपाल दिशोरक्षबलिं
भक्षममयजमानस्यसकुटुंबस्यसपरिवारस्यआयुष्कर्ता क्षेमकर्ता शांतिकर्ता तुष्टि
कर्ता पुष्टिकर्ता वरदोभव १ ततः ॐ भूतायत्वानारातयेस्वरभिविष्येखंद्द ॱ हं
तांदुर्य्याः पृथिव्यामुर्वंतरिक्षमन्वेमि पृथिव्यास्त्वानाभौसादयाम्यादित्याऽउपस्थेग्ने
हव्य ॱ रक्ष अनेनक्षेत्रपतिबलिनेतारंप्रतितंदुलान्प्रक्षिपेत् तदंतेस्विष्टकृद्धोमः

ॐ अग्नयेस्विष्टकृतेस्वाहा इदमग्नयेस्विष्टकृते० इतिस्विष्टकृतम् ब्रह्मणेपूर्णपात्रदानं अद्येत्यादिकृतस्यास्ययागस्यसांगतासिद्ध्यर्थमिदंपूर्णपात्रंप्रजापतिदैवतं ब्रह्मणे दातुमहमुत्सृजे ततोब्रह्मग्रंथिविमोकः ॐ सुमित्रियानऽआपऽओषधयःसन्तु इति पवित्रकंगृहीत्वाप्रणीताजलेनशिरःसंमृज्यॐदुर्मित्रियास्तस्मैसन्तुयोऽस्मान्द्वेष्टियं चवयंद्विष्मः इतिऐशान्यांप्रणीतान्युब्जीकुर्य्यात ततोगोदानं। अथपूर्णाहुतिसं कल्पः अद्येत्यादि० अमुकमासे अमुकपक्षे अमुकवासरे अमुकयज्ञकर्मणा अ मुकेष्टदेवताप्रीतये मम मनोभिलषितंधर्मार्थकामादियथेप्सितायुरारोग्यैश्वर्यपुत्र पशुसखिसुहृत्संबंधिबंधुसंपदिष्टादिप्राप्तयेचब्राह्मणद्वारा मत्कारितेअमुकयज्ञकर्म णिगणपतिगौर्य्यादिनवग्रहाद्यधिदेवप्रत्यधिदेवपंचलोकपालदिक्पालाद्यावाहिते

णपतिगौर्य्यादिनवग्रहाद्यधिदेवप्रत्यधिदेवपंचलोकपालदिक्पालाद्यावाहित ॥६४॥



इष्टदेवताप्रीतयेस्वैर्मंत्रैर्यवतिलतंदुलाज्याहुतिभिः परिपूर्णतासिद्धयेपूर्णाहुतिहोममहं
करिष्ये यजमानःसपत्नीकःआचार्यस्यदक्षिणस्कंधंस्पृशन्ताम्बूलपूगफलाक्षत
घृतंवाघृतपूर्णनारिकेलंवास्रुवेकृत्वापूर्णाहुतिंदद्यात् तद्यथा ॐ पूर्णादर्विपरापत
सुपूर्णापुनरापत वस्नेवविक्रीणावहाइषमूर्जं ँ शतक्रतोस्वाहा इतिपूर्णाहुतिः
॥ अथबर्हिर्होमः ॐ देवागातुविदोगातुंवित्वागातुमितमनसस्पतइमंदेवयज्ञ ँ
स्वाहाव्वातेधाःस्वाहा इतिबर्हिर्होमः अथभस्मवंदनं त्र्यायुषकरणं ॐ त्र्यायुषंजम
दग्नेः इतिललाटे कश्यपस्यत्र्यायुषमितिग्रीवायां यद्देवेषुत्र्यायुषमितिदक्षिण
बाहुमूलेतन्नोअस्तुत्र्यायुषमितिहृदि इतित्र्यायुषकरणं ततःनीराजनं साज्यंत्रिवर्ति
संयुक्तंवह्निनायोजितंमया । दीपंगृहाणदेवेशत्रैलोक्यतिमिरापहम् ॥ ततःपुष्पां

जलिंगृहीत्वा यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणिप्रथमान्यासन् तेहनाकंमहि
मानःसचन्तयत्रपूर्वेसाध्याःसंतिदेवाः ॥ १ ॥ राजाधिराजायप्रसह्यसाहिने नमो
वयंवैश्रवणायकुर्महे समेकामान्कामकामायमह्यम् कामेश्वरोवैश्रवणोददातु
कुबेरायवैश्रवणाय महाराजायनमः ॐ स्वस्ति साम्राज्यंभोज्यंस्वाराज्यंवै
राज्यंपारमेष्ठ्यंराज्यंमहाराज्यमाधिपत्यमयंसमंतपर्यायीस्यात्सार्वभौमः सार्वायुष
आंतादापरार्धात् पृथिव्यैसमुद्रपर्यंतायाएकराळिति तदप्येषश्लोकोऽभिगीतोम
रुतःपरिवेष्टारोमरुत्तस्यावसन्गृहे आविक्षितस्यकामप्रेर्विश्वेदेवाःसभासद इति
विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात संबाहुभ्यांधमतिसं
पतत्रैर्द्यावाभूमिंजनयन्देवएकः श्रीभवानीशंकरमहाविष्णुपंचायतनदेवताभ्यो

नमः मंत्रपुष्पांजलिंसमर्पयामि यानिकानिचपापानिजन्मांतरकृतानिच । तानि तानिविनश्यंतिप्रदक्षिणपदेपदे ॥ अपराधसहस्राणिक्रियंतेऽहर्निशंमया । दासोऽहं क्षम्यतांदेवक्षमस्वपरमेश्वर । आवाहनंनजानामिनजानामिविसर्जनम् पूजांचै वनजानामिक्षम्यस्वांपरमेश्वर ॥ अन्यथाशरणंनास्तित्वमेवशरणंमम । तस्मा त्कारुण्यभावेनरक्षत्वंपरमेश्वर ॥ इतिप्रार्थना ॥ अथदक्षिणासंकल्पः इदं ब्रह्मणे इदमाचार्याय इदमृग्वेदमूर्तये यजुर्वेदमूर्तये सामवेदमूर्तये अथर्ववेद मूर्तये हिरण्यान्नभूदानंकांस्यपात्रंसोमदैवतं ताम्रपात्रंमूर्यदैवतं हिरण्यमग्निदै वतं रजतंपितृदैवतं आसनंवनस्पतिदैवतं कमंडलुं वरुणदैवतं कंकणं वरुणदैवतं मुकुटंप्रजापतिदैवतं उपानहौयमदैवते शय्यातूलिकेइन्द्रदैवते गवांब्रह्मणेत्यादिषट्

त्विग्भ्योयद्दत्तंतेनयज्ञपुरुषःप्रजापतिःप्रीयताम् ततोऽभिषेकंकुर्यात् पत्नीवामतःरुद्र
कलशात्पल्लवोदकैःसकलत्रपुत्रमभिषिंचेत् ॐ देवस्यत्वासवितुःप्रसवेऽश्विनोर्बाहुभ्यां
पूष्णोहस्ताभ्यां सरस्वत्यैवाचोयंतुर्यंत्रियेदधामिबृहस्पतेष्ट्वासाम्राज्येनाभिषिञ्चा
म्यसौ ॐदेवस्यत्वासवितुःप्रसवेऽश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यां सरस्वत्यैवाचोयंतु
र्यंत्रेणाग्नेः साम्राज्येनाभिषिञ्चामिॐदेवस्यत्वासवितुःप्रसवेऽश्विनोर्बाहुभ्यांपूष्णोह
स्ताभ्यां अश्विनोर्भैषज्येनतेजसेब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्यैभैषज्येनवीर्या
यान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्रियैयशसेऽभिषिञ्चामि ॐपालाशंभ
वतितेनब्राह्मणोभिषिंचतिब्रह्मवैपलाशोब्रह्मणैवैनमेतदभिषिंचति यवकल्पांजुहोति
प्राणावैकल्पाऽअमृतमुवैप्राणाऽमृतेनैवैनमेतदभिषिंचति सर्वेषांवाऽएषवेदाना ॑

प्राणाविकल्पोऽअमृतमुवप्राणोऽमृतनवनमेतदाभाषिंचति सर्वेषांवाऽएषवेदानां ॐ



रसायत्सामसर्वेषामेवैनमेतद्देदाना ॐ रसेनाभिषिंचति आपोहिष्ठेतित्रिभिः ग
णाधिपोभानुशशीधरासुतोबुधोगुरुर्भार्गवसूर्यनन्दनः । राहुश्चकेतुप्रभृतिर्नवग्रहाः
कुर्वन्तुवःपूर्णमनोरथंसदा ॥ १ ॥ उपेन्द्रइन्द्रोवरुणोहुताशनोधर्मोयमोवायुर्हरिश्च
तुर्भुजः । गन्धर्वयक्षोरगसिद्धचारणाःकुर्वन्तुवःपूर्णमनोरथंसदा ॥ २ ॥ नलोदधी
चिःसगरःपुरूरवाःसकौन्तलेयोभरतोधनंजयः । रामत्रयंवैनबलीयुधिष्ठिरःकुर्वन्तु
वःपूर्णमनोरथंसदा ॥३॥ मनुर्मरीचिर्भृगुदक्षनारदाःपराशरोव्यासवसिष्ठभार्गवाः ।
वाल्मीकिकुंभोद्भवगर्गगौतमाःकुर्वन्तुवःपूर्णमनोरथंसदा ॥ ४ ॥ रम्भाशचीसत्य
वतीचदेवकीगौरीचलक्ष्मीश्चदितिश्चरुक्मिणी । कूर्मोगजेन्द्रोऽप्यचराचराधराःकु
र्वन्तुवःपूर्णमनोरथंसदा ॥ ५ ॥ गंगाचक्षिप्रायमुनासरस्वतीगोदावरीवेत्रवतीचन

मंदा ॥ साचंद्रभागावरुणाअशीनदीकुर्वन्तुवःपूर्णमनोरथंसदा ॥६॥ तुंगंप्रभासं गुरुचक्रपुष्करंगयाभिमुक्ताबदरीवटेश्वरः। केदारपम्पासरनैमिषारकंकुर्वन्तुवःपूर्ण मनोरथंसदा ॥ ७ ॥ शंखश्चदूर्वासितपत्रचामरंमणिः प्रदीपोवररत्नकांचनम्। स म्पूर्णकुंभःसहितोहुताशनःकुर्वन्तुवःपूर्णमनोरथंसदा ॥ ८ ॥ प्रयाणकालेयदिवासु मङ्गलेप्रभातकालेचनृपाभिषेचनं। व्यासेनसम्पूर्णमनोरथाष्टकंकुर्वन्तुवःपूर्णमनोर थंसदा ॥९॥ इतिअभिषेकः। अथतिलकमंत्रदानम् स्वस्तिनइन्द्रोवृद्धश्रवाःस्वस्ति नःपूषाविश्ववेदाः। स्वस्तिनस्ताक्ष्योंअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥१॥ मंत्रार्थाःसफलाःसंतुपूर्णाःसंतुमनोरथाः। शत्रूणांबुद्धिनाशोऽस्तुमित्राणामुदयोऽस्तु वः ॥ २ ॥ अथाग्निप्रार्थनाविसर्जनंच गच्छत्वंभगवन्नग्नेस्वस्थानेकुंडमध्यतः। हु

वः ॥ २ ॥ अथाग्निप्रार्थनाविसर्जनंच गच्छत्वंभगवन्नग्नेस्वस्थानेकुंडमध्यतः । हु ॥ ३३॥



तमादायदेवेभ्यःशीघ्रंदेहिप्रसीदमे ॥१॥ ॐ गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर ।
यत्रब्रह्मादयोदेवास्तत्रगच्छहुताशन ॥२॥ अथनवग्रहादीन्विसर्जयेत् अक्षताना
दाय भूमिमध्येगच्छसिद्धगोलोकेत्वंप्रजापते । वरुणत्वंजलेगच्छसागरेकलशव्रज
॥१॥ होमांतेगच्छगणपतेब्रह्मांडेत्वंपितामह । विष्णोत्वंगच्छवैकुंठेकैलासेत्वंमहेश्वर
॥२॥ लक्ष्मित्वंविष्णुपार्श्वेतुस्वभर्तारमनुव्रज । रवेगच्छकलिंगेत्वंचंद्रत्वंयमुनातटे॥
॥३॥ अवंतींगच्छभौमत्वंबुधत्वंमगधेव्रज । जीवव्रजसिंधुदेशेकवेभोजकटेव्रज ॥
॥४॥ शनेत्वंगच्छसौराष्ट्रेराहोपैठनिकंव्रज । केतोंतर्वेदींगच्छत्वंस्वंस्थानंनवग्रहाः
॥५॥ इंद्रामरावतींगच्छतथाग्नेयींचपावक । संयमिनींव्रजयमनैर्ऋतींव्रजनिर्ऋते ॥
॥६॥ वरुणांभोनिधौगच्छसर्वत्रव्रजमारुत । कुबेरालकांगच्छत्वमीशैशानींदिशं

व्रज ॥७॥ माहेन्द्रेत्वंव्रजागस्त्यध्रुवत्वंमेरुपर्वते । तथाभवद्भिर्ऋषयोगंतव्यमृषिमंडले ॥८॥ वसवोऽष्टौतुगंगायांरुद्ररुद्रपुरींव्रज । गंधर्वाःकिन्नराःसर्वेस्वंस्वंस्थानंचगच्छत ॥ ९ ॥ यांतुदेवगणाःसर्वे पूजामादायमामकीम् । इष्टकामप्रसिद्ध्यर्थंपुनरागमनायच ॥ १० ॥ रूपंदेहिजयंदेहियशोदेहिद्विषोजहि । पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे ॥११॥ चतुर्भिश्चचतुर्भिश्चद्वाभ्यांपंचभिरेवच । हूयतेचपुनर्द्वाभ्यांसमेविष्णुःप्रसीदतु ॥१२॥ यस्यस्मृत्याचनामोक्त्यातपः पूजाक्रियादिषु । न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतम् ॥१३॥ ततोब्राह्मणान्भोजयित्वा कुटुंबजनैःपरिवृतः स्वयं भोजनं कुर्यात् ॥ ॥ इति वसिष्ठोक्ता हवनपद्धतिः समाप्ता ॥ ॥

पुस्तक मिलनेका ठिकाना—

प्रकाशक—बाबू कन्हैयालाल बृजभूषणदास,

कचौरीगली, बनारस सिटी।

बी. एल्. पावगी द्वारा हितचिन्तक प्रेस, रामघाट, बनारस सिटी में मुद्रितः १५७० a

